॥ देवीवैभवाश्चर्याष्टोत्तरशतदिव्यनामस्तोत्रम् ॥

अस्य श्री देवी-वैभव-आश्चर्य-अष्टोत्तरशत-दिव्यनामस्तोत्र-महामन्त्रस्य
आनन्दभैरव ऋषिः । अनुष्टुप् छन्दः । श्री आनन्दभैरवी
श्रीमहात्रिपुरसुन्दरी देवता ।
कूटत्रयेण बीज-शक्ति-कीलकम् ।
मम श्री आनन्दभैरवी श्रीमहात्रिपुरसुन्दरीप्रसाद-
सिद्ध्यर्थे सान्निध्यसिद्ध्यर्थे जपे विनियोगः ।
कूटत्रयेण कर-षडङ्गन्यासः ॥

भूर्भुवःसुवरोमिति दिग्बन्धः

॥ ध्यानम् ॥

क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ १॥

सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ॥ २॥

॥ पञ्चपूजा ॥

लं पृथिव्यात्मिकायै गन्धं समर्पयामि ।
हं आकाशात्मिकायै पुष्पैः पूजयामि ।
यं वाय्वात्मिकायै धूपमाघ्रापयामि ।
रं अग्न्यात्मिकायै दीपं दर्शयामि ।
वं अमृतात्मिकायै अमृतं महानैवेद्यं निवेदयामि ।
सं सर्वात्मिकायै सर्वोपचारान् समर्पयामि ॥

ॐ ऐं ह्रीं श्रीं
परमानन्दलहरी परचैतन्यदीपिका ।
स्वयंप्रकाशकिरणा नित्यवैभवशालिनी ॥ १॥

विशुद्धकेवलाखण्डसत्यकालात्मरूपिणी ।

आदिमध्यान्तरहिता महामायाविलासिनी ॥ २॥

गुणत्रयपरिच्छेत्री सर्वतत्त्वप्रकाशिनी ।
स्त्रीपुंसभावरसिका जगत्सर्गादिलंपटा ॥ ३॥

अशेषनामरूपादिभेदच्छेदरविप्रभा ।
अनादिवासनारूपा वासनोद्यत्प्रपञ्चिका ॥ ४॥

प्रपञ्चोपशमप्रौढा चराचरजगन्मयी ।
समस्तजगदाधारा सर्वसञ्जीवनोत्सुका ॥ ५॥

भक्तचेतोमयानन्तस्वार्थवैभवविभ्रमा ।
सर्वाकर्षणवश्यादिसर्वकर्मदुरन्धरा ॥ ६॥

विज्ञानपरमानन्दविद्या सन्तानसिद्धिदा ।
आयुरारोग्यसौभाग्यबलश्रीकीर्तिभाग्यदा ॥ ७॥

धनधान्यमणीवस्त्रभूषालेपनमाल्यदा ।
गृहग्राममहाराज्यसांराज्यसुखदायिनी ॥ ८॥

सप्ताङ्गशक्तिसम्पूर्णसार्वभौमफलप्रदा ।
ब्रह्मविष्णुशिवेन्द्रादिपदविश्राणनक्षमा ॥ ९॥

भुक्तिमुक्तिमहाभक्तिविरक्त्यद्वैतदायिनी ।
निग्रहानुग्रहाध्यक्षा ज्ञाननिर्द्वैतदायिनी ॥ १०॥

परकायप्रवेशादियोगसिद्धिप्रदायिनी ।
शिष्टसञ्जीवनप्रौढा दुष्टसंहारसिद्धिदा ॥ ११॥

लीलाविनिर्मितानेककोटिब्रह्माण्डमण्डला ।
एकानेकात्मिका नानारूपिण्यर्धाङ्गनेश्वरी ॥ १२॥

शिवशक्तिमयी नित्यशृङ्गारैकरसप्रिया ।
तुष्टा पुष्टापरिच्छिन्ना नित्ययौवनमोहिनी ॥ १३॥

समस्तदेवतारूपा सर्वदेवाधिदेवता ।
देवर्षिपितृसिद्धादियोगिनीभैरवात्मिका ॥ १४॥

निधिसिद्धिमणीमुद्रा शस्त्रास्त्रायुधभासुरा ।
छत्रचामरवादित्रपताकाव्यजनाञ्चिता ॥ १५॥

हस्त्याश्वरथपादातामात्यसेनासुसेविता ।
पुरोहितकुलाचार्यगुरुशिष्यादिसेविता ॥ १६॥

सुधासमुद्रमध्योद्यत्सुरद्रुमनिवासिनी ।
मणिद्वीपान्तरप्रोद्यत्कदंबवनवासिनी ॥ १७॥

चिन्तामणिगृहान्तस्था मणिमण्डपमध्यगा ।
रत्नसिंहासनप्रोद्यच्छिवमञ्चाधिशायिनी ॥ १८॥

सदाशिवमहालिङ्गमूलसंघट्टयोनिका ।
अन्योन्यालिङ्गसंघर्षकण्डूसंक्षुब्धमानसा ॥ १९॥

कलोद्यद्बिन्दुकालिन्यातुर्यनादपरंपरा ।
नादान्तानन्दसन्दोहस्वयंव्यक्तवचोऽमृता ॥ २०॥

कामराजमहातन्त्ररहस्याचारदक्षिणा ।
मकारपञ्चकोद्भूतप्रौढान्तोल्लाससुन्दरी ॥ २१॥

श्रीचक्रराजनिलया श्रीविद्यामन्त्रविग्रहा ।
अखण्डसच्चिदानन्दशिवशक्त्यैकरूपिणी ॥ २२॥

त्रिपुरा त्रिपुरेशानी महात्रिपुरसुन्दरी ।
त्रिपुरावासरसिका त्रिपुराश्रीस्वरूपिणी ॥ २३॥

महापद्मवनान्तस्था श्रीमत्त्रिपुरमालिनी ।
महात्रिपुरसिद्धाम्बा श्रीमहात्रिपुराम्बिका ॥ २४॥

नवचक्रक्रमादेवी महात्रिपुरभैरवी ।
श्रीमाता ललिता बाला राजराजेश्वरी शिवा ॥ २५॥

उत्पत्तिस्थितिसंहारक्रमचक्रनिवासिनी ।
अर्धमेर्वात्मचक्रस्था सर्वलोकमहेश्वरी ॥ २६॥

वल्मीकपुरमध्यस्था जम्बूवननिवासिनी ।
अरुणाचलशृङ्गस्था व्याघ्रालयनिवासिनी ॥ २७॥

श्रीकालहस्तिनिलया काशीपुरनिवासिनी ।
श्रीमत्कैलासनिलया द्वादशान्तमहेश्वरी ॥ २८॥

श्रीषोडशान्तमध्यस्था सर्ववेदान्तलक्षिता ।
श्रुतिस्मृतिपुराणेतिहासागमकलेश्वरी ॥ २९॥

भूतभौतिकतन्मात्रदेवताप्राणहृन्मयी ।
जीवेश्वरब्रह्मरूपा श्रीगुणाढ्या गुणात्मिका ॥ ३०॥

अवस्थात्रयनिर्मुक्ता वाग्रमोमामहीमयी ।
गायत्रीभुवनेशानीदुर्गाकाळ्यादिरूपिणी ॥ ३१॥

मत्स्यकूर्मवराहादिनानारूपविलासिनी ।
महायोगीश्वराराध्या महावीरवरप्रदा ॥ ३२॥

सिद्धेश्वरकुलाराध्या श्रीमच्चरणवैभवा ॥ ३३॥

श्रीं ह्रीं ऐं ॐ

कूटत्रयेण षडाङ्गन्यासः ।
भूर्भुवःसुवरोमिति दिग्विमोकः ।
पुनर्ध्यानम् ।
पुनः पञ्चपूजा ॥